आर्षम्

# लघु-रामायणम्

## वाल्मीकीयम्

—:o:—

( त्रि-साहस्री संहिता )

आदि-काव्य-वचनैः

माद्राज-प्रदेश-स्थ-ब्रह्मपुर-कलेज-पूर्वतनाध्यक्ष-कलिकाता-सिटि-कलेज-
भूतपूर्वाध्यापक-संस्कृतसोपानादि-व्याकरण-प्रणेतृ-


**श्रीगोविन्दनाथ-गुह-एम् ए-प्रोक्तम्**


'यावत् स्थास्यन्ति गिरयः सरितश्च महीतले,
तावद् रामायण-कथा लोकेषु प्रचरिष्यति'


तृतीयं संस्करणम्

कलिकातायाम्

१०८-नारकेलडाङ्गा-मेन्-रोडि स्वर्ण-यन्त्रे श्रीकालचामयाचार्य्येण मुद्रितम्

*Publisher :*

**Govindanath Guha, M.A.**

*39, Harrison Road, Calcutta.*

*Agents :*

**Calcutta : Bhattacharyya & Son, 65, College Street.**

**LAHORE :**

**Mehr Chand Lachhman Das** | **Motilal Banarsi Das**
*Said Mitha Bazar.* | *Said Mitha Bazar*

## শ্রীগোবিন্দনাথ গুহের

১। **সংস্কৃতসোপান** (পঞ্চম সংস্করণ)—প্রথমশিক্ষা সংস্কৃত ব্যাকরণ। সহজ সংস্কৃত সূত্র, তাহার বাঙ্গালা ব্যাখ্যা, যথেষ্ট উদাহরণ, অনেক অনুশীলনী, রচনা ও অনুবাদের প্রচুর উপকরণ এবং সূত্র-সূচী, শব্দ-রূপ-সূচী ও ধাতু-রূপ-সূচী-সমন্বিত। গবর্ণমেণ্ট্ কর্ত্তৃক পশ্চিম বঙ্গস্থ হাইস্কুলের উচ্চশ্রেণী সকলের এবং পূর্ব্ববঙ্গের সপ্তম ও অষ্টম শ্রেণীর পাঠ্যরূপে অনুমোদিত। ।৵০

"Written on approved principles'. 'Admirably suited to the needs of Entrance candidates'. 'The rules * * in easy Sanskrit * * are easily committed to memory and applied in practice.' 'The method and arrangement * * are excellent.'—*Rajendra Chandra Sastri*, M. A. (P. R. S.). 'Admirably suited to * * students in the middle forms as well as those who read Sanskrit for the Matriculation Examination.' 'The best elementary Sanskrit Grammar I have ever seen.'— *Pt. Asutosh Sastri, M A. (Pl, Sans. Col., Cal.)* 'The practice of learning by rote * * will be removed by the introduction of elementary works like this.'—*Prof. N. Chakravarti, M. A. (Precy. Col., Cal.)*. '*Sutras* in Sanskrit learnt by heart never leave the memory.'—*The Bengali.*

২। **সংস্কৃতপ্রবেশ**—or A JUNIOR SANSKRIT GRAMMAR.—In Anglo-Sanskrit. For Matriculation and Intermediate Candidates. Written on scientific method. *In preparation*

৩। **বিদ্যাসাগর-কৃত উপক্রমণিকা**— আদ্যন্ত পাণিনি-মতানুসারে সংশোধিত। ৭ম সংস্করণ। ।০

৪। **বিদ্যাসাগর-কৃত সীতার বনবাস**—সচিত্র। অবতরণিকা, টীকা, ও টীকা-সূচী সহিত। ৩য় সংস্করণ। ৸০

৫। **লঘু রামায়ণম্**—বাল্মীকির ৩০০০ শ্লোকে সাত কাণ্ডে সম্পূর্ণ। পূর্ণ ও সর্ব্বাঙ্গীন গবেষণা মূলক সাহিত্যিক ও ঐতিহাসিক আলোচনা বিশিষ্ট সংস্কৃত ভূমিকা-সমন্বিত। টীকা-সূচী ও তিন হাজারের অধিক পাদ-টীকা সহিত। বাঙ্গালা দেশে টোলে কাব্যের প্রথম পরীক্ষার এবং পঞ্জাব বিশ্ব-বিদ্যালয়ে প্রাজ্ঞ-পরীক্ষার নির্দ্দিষ্ট পাঠ্য পুস্তক। তৃতীয় সংস্করণ। ৩।০ ; রাজ-সংস্করণ, ২০্।

৬। **ভারতম্, বৈয়াসিকম্**—পরি-নব-সাহস্রী সংহিতা। লঘু-রামায়ণবৎ আজীবন-বৃত্তি-বৃত্তিসূচী-মণ্ডিতম্। *In preparation.*

৭। **রুদ্র প্রতাপ**—ছোট বড় সকলের পাঠ্য সচিত্র কথা। সুন্দরের সন্ধানে বীর্য্যবানের যাত্রা। সুন্দরীর অদ্ভুত আকাঙ্ক্ষা ও শক্তি। যবদ্বীপের রা[illegible]র সহিত কাশ্মীরের রাজার বিবাহ। আনন্দোৎসব। মানবের জীবনে সাধুতার স্থান। ।০

৮। **সংস্কৃত-রচনা শিক্ষা, ১ম খণ্ড**—ইহার সাহায্যে বাঙ্গালায় সংস্কৃতের ও সংস্কৃতে বাঙ্গালার অনুবাদ করিতে, সংস্কৃত লিখিতে এবং সংস্কৃতে আলাপ করিতে শেখা যাইবে। ব্যাকরণের শব্দরূপ আরম্ভ করিয়াই এই পুস্তক ধরা যায়। ৵০

# अनुक्रमणी।



# लघु-रामायणे

## आदि-काण्डे



## अयोध्या-काण्डे



## अरण्य-काण्डे

# आलोचनम् ।

वाल्मीकिः खलु कवीनां प्रथमः सम्बभूव । तदुक्तं जैशूत्तर-प्रथम-शतके अश्वघोषेण,—

'वाल्मीकि-रादय ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः' (१) इति ।

स वै रामायणं सर्व-काव्यानामादि विरचयामास । तमेव सम्बुध्य ब्रह्म-मुखेन भवभूतिरुवाच,—

'तद् ब्रूहि राम-चरितम्,...आद्यः कविरसि' (२) इति ।

भवभूतेः प्रागेव कालिदासो ऽब्रवीत्,—

'प्राचेतसोपज्ञं रामायणम्' (३) इति ।

क्षेमेन्द्रो ऽनुजगौ,—

'स वः पुनातु वाल्मीकिः सूक्तामृत-महोदधिः !
ओङ्कार इव वर्णानां, कवीनां प्रथमो मुनिः' (४) इति ।

रामायणमेवाश्रित्य विश्व-विश्रुतं रघु-वंशं निर्ममे । तदुक्तम्,—

'अथवा कृत-वाग्-द्वारे वंशे ऽस्मिन् पूर्व-सूरिभिः
मणौ वज्र-समुत्कीर्णे सूत्रस्येवास्ति मे गतिः' (५) इति ।

भोज-राजो ऽपि चम्पू-रामायणं कुर्वन्

'वाल्मीकि-गीत-रघु-पुङ्गव-कीर्ति-लेशैस्
तृप्तिं करोमि कथमप्यधुना बुधानाम्' (६) इति

---

(१) बुद्ध-चरितम् ( काउएल्-संस्कृतम् ), १।४८ । (२) उत्तर-चरितम्, २ । महावीर-चरितस्य प्रारम्भो ऽपि दृश्यताम् । (३) रघु-वंशम्, १५।६३ । प्राचेतसस्य ( वाल्मीकेः ) उपज्ञा ( आद्यं ज्ञानम्, वाल्मीकिना आदौ ज्ञातम् इत्यर्थः ) रामायणम् । (४) रामायण-कथा-सार-मञ्जरी, परिशिष्टम्, २ । (५) रघु-वंशम्, १।४। [ कवेर्मन्दत्वात् रघु-वंश-कीर्तनं दुष्करमेव । ] अथवा ( पक्षान्तरे ) पूर्व-सूरिभिः ( वाल्मीकि-प्रभृतिभिः कविभिः ) कृत-वाग्-द्वारे ( कृत-रामायणादि-रूप-प्रवेश-मार्गे ) अस्मिन् वंशे वज्र-समुत्कीर्णे ( सूची-विद्धे ) मणौ सूत्रस्येव मे गतिः ( प्रवेशः ) अस्ति । (६) चम्पू-रामायणम्, १।४ ।

रामायणं वाल्मीकेरेवेत्यवदत् । तस्याद्यत्वं कविषु राजशेखरो ऽपि कीर्तयामास,—

'बभूव वल्मीक-भवः कविः पुरा' (७) इत्यादिना ।

गोवर्धनः

'श्रीरामायण-भारत-बृहत्कथानां कवीन् नमस्कुर्मः' (८) इत्यनेन

कविषु नमस्कार्येषु वाल्मीकिरेव प्रथमः इति विज्ञाप्य, सत्स्वपि कालिदास-भवभूति-बाणभट्ट-प्रभृतिष्वब्रवीत्,—

'सति काकुत्स्थ-कुलोन्नति-कारिणि रामायणे किमन्य-काव्येन' (९) इति ।

तमेव त्रि-विक्रम-भट्टः कथा-प्रारम्भे

'नमस्तस्मै कृता येन रम्या रामायणी कथा' (१०) इति

भक्ति-निर्भरं प्रणनाम । आद्यत्वेनैव, शार्ङ्गधरः संग्रहे

'कवीन्दुं नौमि वाल्मीकिं यस्य रामायणीं कथाम्
चन्द्रिकामिव चिन्वन्ति चकोरा इव साधवः' (११) इति

स्व-कृत-श्लोकेन कविषु तमेव प्रथमं नमश्चकार । रामायणस्यानुष्टुभमुद्दिश्य वन-देवता-मुखेन भवभूतिरुवाच,—

'चित्रम्, आम्नायादन्यो नूतनश्छन्दसामवतारः !' (१२) इति ।

वेदेऽपि तु रामायणस्यानुष्टुबस्ति । तथा हि ऋक्-संहितायां,—

'आ त्वा ग्रावा वदन्निह सोमी घोषेण यच्छतु ;
दिवो अमुष्य शासतो दिवं यय दिवा-वसो' (१३) ।

---

(७) बाल-रामायणम् ( गोविन्ददेव-संस्कृतम्, १८६९), १।१६ । (८) सप्त-शती ( सोमनाथ-संस्कृता, १८६४), १।२२ । (९) सैव, १।३३ । (१०) दमयन्ती-कथा ( ए. सो. बे. लिपिः ) प. १ । (११) पद्धतिः ( पीटार्सन-संस्कृता, १८८८), १७२ । (१२) उत्तर-चरितम्, २ । (१३) ऋग्-वेद-संहिता, ८।३४।२। आ, सोमी (सोमवान्) ग्रावा ( पाषाणः ) वदन् ( शब्दं कुर्वन् ) घोषेण ( शब्देन ) [सह] त्वा इह [यज्ञे]

ये तु वदन्ति मन्त्र-द्रष्टारो ऽपि कवय इति, तेषां मते आदि-द्रष्टा ब्रह्मैवादि-कविः, न वाल्मीकिः। तदुक्तम्,—

'तेने ब्रह्म हृदा य आदि-कवये' (१४) इति।

'अग्निर् होता कवि-क्रतुः सत्यश्चित्र-श्रवस्तमः
देवो देवेभिरागमत्' (१५),

कवी नो मित्रा-वरुणा तुवि-जाता उरु-क्षया
दक्षं दधाते अपसम्' (१६), इत्यादिषु

वेद-मन्त्रेषु कवि-शब्दो बहुधा प्रयुक्तो ऽपि द्रष्टेत्येकमेवार्थं द्योतयति।

'अध्यापयामास पितॄन् शिशुराङ्गिरसः कविः' (१७) इति,
'द्वयोरप्येतयोर्मूलं यं सर्वे कवयो विदुः,
तं यत्नेन जयेल्लोभं तज्जावेतावुभौ गणौ' (१८) इति,
'सोमपास्तु कवेः पुत्राः' (१९) इति,
'चतुरो ब्राह्मणस्याद्यान् प्रशस्तान् कवयो विदुः' (२०) इति च

---

यच्छतु; [हे] दिवा-वसो (दीप्त हविष्क), अमुष्य दिवः (स्वर्गस्य) शासतः [इन्द्रस्य] दिवं (स्वर्गं) यय (गच्छत)। सम्भ्रमार्थे बहु-वचनम्। (१४) श्रीमद्भागवतम्, १।१।१। यः (परमेश्वरः) आदि-कवये (आदि [मन्त्र-] द्रष्ट्रे, ब्रह्मणे इत्यर्थः) ब्रह्म (वेदम्) हृदा (मनसैव) तेने (विस्तृतवान्, प्रकाशितवान् इत्यर्थः)। (१५) ऋग्-वेद-संहिता, १।१।५। होता (होम-निष्पादकः) कवि-क्रतुः (द्रष्टृ-प्रज्ञानवान्) सत्यः (अनृत-रहितः) चित्र-श्रवस्तमः (अतिशयेन विविध-कीर्ति-युक्तः) अग्निर् देवो देवेभिः ([अन्यैः] देवैः) आगमत् ([अस्मिन् यज्ञे]) समागच्छतु)। (१६) सैव, १।२।९। कवी (द्रष्टारौ) तुवि-जाता (तुवि-जातौ, उच्च-कुल-सम्भूतौ) उरु-क्षया (उरु-क्षयौ, पृथु-निवासौ) मित्रा-वरुणा (मित्रा-वरुणौ) नः (अस्माकम्) दक्षम् (बलम्) अपसम् (स-फलम्) दधाते (कुर्वाते)। (१७) मनुः, २।१५१। (१८) स एव, ७।४९। एतयोः —कामज-क्रोधज-व्यसनयोः। (१९) स एव, ३।१९८। (२०) स एव, ३।२४।

मनु-वचनेषु

'कवीनामुशना: कवि:' (२१) इति,

'कविं पुराणमनुशासितारम् अणोरणीयांसमनुस्मरेद् य:' (२२) इति च

गीता-वचनयोश्च वैदिकार्थं एवोपलभ्यते। मध्य-युग-साहित्ये तु कवि-शब्द: प्राय: 'काव्यकार'-वाचको दृश्यते। तथा हि, 'मन्द: कवि-यश:-प्रार्थी' (२३) इति कालिदास:, 'इदं कविभ्य: पूर्वेभ्यो नमो-वाकं प्रशास्महे' (२४) इति, 'आद्य: कविरसि' (२५) इति च भवभूति:।

वस्तुतस्तु वैदिके युगे य एव हृदा निगूढमपि तत्त्वमपश्यत् स एव कविरित्याख्यामलभत। रामायण-युगे तु यो वै तत्त्वं हृदा दृष्ट्वा आख्यान-मुखेन वर्णयामास प्राधान्येन स एव कविरूचे। 'श्रुत्वा पूर्वं काव्य-वीजं देवर्षेर्नारदाद्, ऋषि:' इत्यादि, 'धर्म-कामार्थ-संयुक्तं पुण्य-श्रवण-कीर्तनम्' इत्यन्तं च (२६) रामायणोत्पत्ति-विवरणमत्र प्रमाणम्।

'आदि काव्यं महत्त्वेतत् पुरा वाल्मीकिना कृतम्' (२७) इति

रामायण-वाक्येनैव रामायणस्य महा-काव्यत्वमादि-काव्यत्वं च समुच्यते।

न खलु महाजनस्याविर्भाव आकस्मिको भवति। तद् वक्तव्यम्, प्रागपि कवयो ऽभवन्निति। ते तु सूर्योदये तारका इव वाल्मीकेराविर्भावे व्यलीयन्त। स्रोतांसि महा-नदीमिव प्राक्-

(२१) गीता, १०।३७। उशना:—शुक्राचार्य:। (२२) सैव, ८।९। (२३) रघु-वंशम्, १।३। (२४) उत्तर-चरितम्, १।१। नमो-वाकम्—नम:-शब्दोच्चारण-पूर्वकम्। प्रशास्महे—प्रार्थयामहे। (२५) तदेव, २। (२६) अघसाद् अनुक्रमणिका, ५९—६२। (२७) लघु रामायणम्, ६।२२।८।

सम्भूतानि आख्यानमयानि काव्यान्यपि स्वल्पानि महा-काव्यं रामायणं विविशुः। ततः प्रभृति वाल्मीकिरेवादि-कविरिति नाम्ना प्रसिद्धिमगमत्। तदुक्तं कालिदासेन वाल्मीकिमुद्दिश्य,

'स्व-कृतिं गापयामास कवि-प्रथम-पद्धतिम्' (२८) इति।

यथार्थञ्चैवोक्तं भवभूतिनात्रेयी-मुखेन,

'अथ भगवान् प्राचेतसः प्रथमं मनुष्येषु शब्द-ब्रह्मणस्
तादृशं विवर्तमितिहासं रामायणं प्रणिनाय' (२९) इति।

रामायणोत्पत्तेः परमेव केनचिदपर-कविना ग्रन्थोत्पत्ति-विवरणमुपनिबद्धम्। तत्र, 'वृत्तं प्रथय रामस्य यथा ते नारदाच्छ्रुतम्' इति ब्रह्मोपदेशेन 'तमेवं गुण-सम्पन्नं रामं सत्य-पराक्रमम्' इत्यादि 'पालयामास चैवेमाः पितृवत् मुदिताः प्रजाः' इत्यन्तं च (३०) नारदोक्तं रामोपाख्यानमेवावलम्ब्य रामायणं निर्ममे इति स्थितेः, रामायणं वाल्मीकीयमादावयोध्याकाण्डादि युद्ध-काण्डान्तं चासीदित्यवगम्यते। महा-विभाषा केवलं सीता-हरणं तदुद्धरणं राम-प्रत्यागमनं च रामायण-विषयत्वेनोल्लिखती आद्युत्तर-काण्डे परिहरत्येव (३१)। तथा च, रामो भरद्वाजाय आत्मानं निवेदयन् (३२), सीता रावणाय स्व-चरितं विवृण्वती (३३), लक्ष्मणो हनूमते राम-चरितं कथयन् (३४), हनूमांश्च सीता-संश्रवणे राम-विवरणं व्याहरन् (३५) सिद्धाश्रम-गमन-धनुर्भङ्ग-विवाहादि-प्रकरणानि

(२८) रघु-वंशम्, १५।३३। प्रथम-पद्धतिः—आदि-रीतिः। (२९) उत्तर-चरितम्, २। शब्द-ब्रह्मणः—वेदस्य। विवर्तम्—रूपान्तरितम्। (३०) भवसाद-नुक्रमणिका, ५४, १२, २६। (३१) जा. र. ए. सो., १९०७, पृ. ९९। (३२) वाल्मी रामायणम्, २।१८।२०—२३। (३३) तदेव, ३।१४।४—१६। (३४) तदेव, ४।१।१७—२१। (३५) तदेव, ५।३।२—६।

विहाय अयोध्याकाण्ड-प्रारम्भ एव कथां प्रस्तुवन्ति। एतदपि रामायणस्य अयोध्याकाण्डादित्वं दर्शयति। युद्धकाण्डस्यान्त्ये सर्गे स्थितः

'आदि काव्यं मदत्त्वेतत् पुरा वाल्मीकिना कृतम्' (३६) इति

श्लोकार्धो ऽपि प्रमाणम् युद्ध-काण्डान्तत्वे रामायणस्य। महा-भारतीयं रामोपाख्यानं युद्धकाण्डान्तमेव (३७)।

स्वल्पायतनं चासीदादि-रामायणम्, काण्ड-द्वयाभावात्, प्रक्षेप-राहित्याच्च। महा-विभाषा-काले ऽपि तद् द्वादश-सहस्र-श्लोकात्मकम् अवर्तत (३८)। अधुना तत्र पञ्च-विंशति-सहस्राधिकाः श्लोकाः सन्ति।

अथ गच्छति काले को ऽप्युत्तर-काण्डं रचयित्वा रामायणेन योजयामास। तदप्यति-प्राचीनं मन्तव्यम्,

'रामो ऽपि, कृत्वा सौवर्णीं सीतां पत्नीं यशस्विनीम्,
ईजे यज्ञैर् बहु-विधैः सह वै भ्रातृभिर् युतः (३९) इति

साम-गृह्य-परिशिष्ट-वचनस्य तन्मूलकत्वात्। तस्मिन्नेव काण्डे सीताया अनघत्वं प्रतिपादयितुं रामेणोक्तं मन्त्र-भवने लक्ष्मणं प्रति

'प्रत्यक्षं तव, सौमित्रे, देवानां च हुताशनः
अपापां मैथिलीं प्राह, वायुश्चाकाश-गोचरः' (४०) इति,

शपथ-सभायां वाल्मीकिं प्रति

'प्रत्ययस्य पुरा दत्तो वैदेह्या सुर-सन्निधौ,
शपथश्च कृतस्तत्र, तेन वेश्म प्रवेशिता' (४१) इति च।

---

(३६) लघु रामायणम्, ६।२२।८। (३७) वन-पर्व, २७३—२९० ; द्रोण-पर्व, ५७। (३८) ३१-संख्यका पाद-टीका द्रष्टव्या। (३९) कर्म-प्रदीपः (ए. सी. वे. लिपिः, आइ. डि. २८), ३४०। सह वै भ्रातृभिर्युतः—'सह भ्रातृभिरर्चितः' 'सह भ्रातृभिरच्युतः' इति वेबर-धृते पाठान्तरे। (४०) लघु रामायणम्, ७।४।१३।
(४१) तदेव, ७।११।१८।

वैदेह्या अग्नि-प्रवेशस्यानुल्लेखात् प्रतीयते, उत्तर-काण्डोत्पत्तेः परमेव युद्ध-काण्डे अग्नि-प्रवेश-विवरणं प्राक्षिप्यतेति। प्रक्षिप्तम् अपि तत् सु-प्राचीनं ज्ञेयं, 'जानकीमिव जात-वेदसं पत्युः पुरः प्रविशन्तीं...मातरं ददर्श' (४२) इति जैशूत्तर-सप्तम-शतक-सम्भूते बाण-विरचिते हर्ष-चरिते दर्शनात्। धर्म-शास्त्रेषु सतीत्व-परीक्षणाय नारीणामग्नि-प्रवेशस्य विधानाभावात् बौद्ध-जातके च तस्य दर्शनात् (४३) सीताग्नि-परीक्षायाः पर-समाज-भवोपाख्यान-मूलकत्वमनुमीयते।

'दिवर्षे ये त्वया प्रोक्ता गुणाः पुरुष-दुर्लभाः,
तेषामेव समभायः साम्प्रतं राममाश्रितः' (४४) इति

नारदोक्तेः राम-काल एव रामायणं व्यरचीति स्थितम्। उत्तर-काण्डमनेन सिद्धान्तेन सङ्गच्छते।

'अयोध्या नाम तत्रासीन्नगरी लोक-विश्रुता' (४५) इति तु

आदि-काण्ड-विरचन-काले अयोध्याया नाम-मात्र-शेषत्वं दर्शयति। अतो वक्तव्यम्, उत्तर-काण्डात् परमेवादि-काण्डम् उदपद्यतेति। तदपि प्राचीनं मन्तव्यम्,

'दशरथश्च राजा परिणत-वया विभाण्डक-महामुनि-सुतस्य ऋष्यशृङ्गस्य प्रसादाद् ...अवाप चतुरः पुत्रान्' (४६) इति

---

(४२) हर्ष-चरितम् (ईश्वरचन्द्रविद्यासागर-संस्करणम्, १८८३), पृ. १२७-२८।
(४३) अण्डभूत-जातक। 'सा मायाविका...अञ्ञस्स पुरिसस्स हत्थ-सम्फस्सम् न जानामि इमिना सच्चेन अयम् अग्गि मा मं झापेसीति अग्गिं पविसितुं आरद्धा'।
(४४) अघशादशुद्धमथिका, २७। (४५) लघु रामायणम्, १।१।२।
(४६) कादम्बरी (काशी-संस्करण), पृ. १०५।

बाण-रचितायां कादम्बर्यां दर्शनात्। बहु-कवि-कृतित्वं च रामायणस्य वचन-विसंवादेनाप्युपलभ्यते।

'इक्ष्वाकूणामिदं तेषां वंशे, कीर्ति-विवर्धनम्,
निबद्धं पुण्यमाख्यानं रामायणमिति श्रुतम्' (४७) इति

प्रस्तावनोक्तिः इक्ष्वाकु-कुल एव रामायणमजनीति घोषयति, उत्तर-काण्डं तथानुक्रमणिका तु तपो-वन एवेति।

इदं हि महा-काव्यं स्व-महिम्नालङ्कार-शास्त्रमतितिष्ठत्येव। यदा इदमद्भुतोपमम् आदि-कवेर्हृदयात् प्रावर्तत, तदालङ्कार-शास्त्रं नासीदेव। नानेन काव्येन समं किञ्चित् पुरस्तात् परस्ताद् वा प्रादुर्बभूव। रघु-भट्टि-प्रभृतीनि विश्रुतानि महा-काव्यानि वीरचरितोत्तरचरितादीनि नाटकानि च रामायण-सम्भवानि। असंख्येयाः खलु इतरे ग्रन्था रामायण-प्रभवाः।

स्वभाव-वर्णने, चरित्राङ्कने, मानव-चित्त-सागर-भाव-विलास-प्रदर्शने, व्यक्तीनां गृहाणां समाजानां च परमादर्श-निर्देशे, सार्वजनीन-सनातन-धर्माभिव्यञ्जने च वाल्मीकिः पूर्वेषामपि कवीनां गुरुः। अनु वाल्मीकिं खलु कवयो वाचि भावे च। निर्मल-वायु-कोष-परि-रक्षितमादिम-वन-राजि-मण्डितं शैल-शिखरमिव रामायणं शोभनं पावनमुज्जीवनं च। सत्यमेवात्रावलम्बनम्, सुन्दरमत्रोपभोगः शिवं चात्र परिणामः। भाव-प्रवाहा दुर्दर्शा दुस्तराश्च। सङ्कटञ्च तेषां भयावह एव। फलं तु दुर्लङ्घ्यमप्यवश्यम्भावि—यतो धर्मस्ततो जय इति। न देवो ऽत्र अकाण्डे आविर्भूय मानवस्य चरित्र-बलं

(४७) वङ्गीय-रामायणम्, १।५।३।

स्वेच्छा-प्रणोदितं कर्म-प्रवाहं वा व्यर्थी-करोति, न चाहृष्टं नाम कश्चिद् दानवः पूर्व-जन्म-जः कर्म-व्यूहो वा पुरुषकारं निष्फलतां नयति। यत् किञ्चन असत्यमशुद्धं वा तत् सर्वं परिहर्तव्य-मित्याख्यान-मुखेन निन्द्यते, यत्तु सत्यं शुद्धं च तदेवाश्रयणीय-मिति प्रशस्यते। हत्या निष्ठुरता च जयमात्र-प्रयोजना। युद्ध-क्षेत्रे ऽप्ययुध्यमानाः पलायमानाश्च नाहन्यन्ते। न च बहु-मता निहता अपि बहु-मानेन वि-योज्यन्ते। न विजयो ऽधिकार-हरणाय। शौर्यं यथा विक्रमे तथा बाह्याभ्यन्तर-क्लेश-सहने ऽपि। यथोर्जस्वलास्तथा सु-कुमारा अपि गुणाः सममेव प्रकाश्यन्ते। आदि-कविः वागर्थ-शिल्पिनामपि गुरुः। न तस्याति-सूक्ष्मे ऽपि चित्रे दूर्निरीक्ष्यो ऽपि कलङ्क उपलभ्यते। सहजा सरला च वाल्मीकेर् भारती। स्वभाव-जः सनातनश्चास्य भावः। स्थाने एव ऋषि-हृदि तयोः सङ्गमो ऽभूत्।

इह खलु वर्षे रामायणं न केवलं काव्यं, प्रत्युतेतिहत्तम्। जन-कोटयस्तस्यानुवादमपि यथार्थं मत्वा श्रावं श्रावं मुहुर्मुहुः हृष्यन्ति। हिमाचल-क्रोड़-लालिता नेपाल-जा परिचारिका दुर्जय-लिङ्गे कथं कथमपि वर्ण-परिचयमुपलभ्य नेपालि-रामायणं सु-स्वरं पठित्वा अवसर-कालं नयति। आर्य-सैनिकाः प्रत्यहमभिनिर्याणान्ते गोष्ठ्यां गोष्ठ्यां भक्ति-पूर्वं हिन्दि-रामायणं गायन्ति च शृण्वन्ति च। द्वार-पाला आपणिकाश्च स्वस्वे-ऽप्यवसरे तथैव कुर्वन्ति। वङ्ग-पल्लीषु पुरुषा रमण्यश्च वङ्गानुवादं केचित् पठित्वा केचित् पाठयित्वा केचिद् गीत्वा केचिद् गापयित्वा केचित् श्रुत्वा केचित् श्रावयित्वा परमानन्दं

लभन्ते। आसाम-वन-प्रस्थे उत्कल-प्रान्तर-पल्ल्यां त्रैलिङ्ग-भूमौ तामिलके कर्णाटे मालावारे महा-राष्ट्रे गुर्जरे पञ्च-नद-प्रदेशे च रामायणस्यानुवादो यथा काव्यं तथेतिवृत्तमपीति सादरं पठ्यते।

व्यतीतानि राम-कालात् परं कानिचिद् वर्ष-सहस्राणि। अद्यापि रामायण-वृत्तान्तं यथार्थं मन्यमानाः, सीता-राम-चरण-स्पृष्ट-भूमि-सन्दर्शनाय, वर्षे वर्षे, विंशति-कल्यानि लक्षाणि भारतानां चित्रकूटमभिगच्छन्ति (४८), सहस्राणि च अयोध्यातो निर्गत्य राम-भ्रमण-मार्गेण सिंहलं यान्ति (४९)। यान्ति यति नराश्चित्रकूटं, न तति मक्कां जेरुजेलेमं वा।

वस्तुतस्तु काव्यमपि रामायणमितिवृत्तम्। तद्धि नाम युग-विशेषमाश्रितं वर्ष-विशेषस्य गृह-समाज-राष्ट्राणां यथार्थं विवरणम्। तत्र पितुः शासनं, पत्न्याः पातिव्रत्यं, पत्युः समादरः, पित्रोर्भक्तिः, अपत्ये स्नेहो, सौभ्रात्रं, कौमार-भृत्यं, विवाहादयः संस्कारा, दाय-विभागो, विधिर्, व्यवहारो, व्यवस्था, राज-वंशः, शासन-प्रणाली, राज-नीतिः, राज्ञोर् वैरम्, अभि-निर्याणं, विग्रहः, सन्धिः, कु-मन्त्रो, विद्रोह, उत्सवश्चेत्यादयो विषयाः पूर्वापर-सम्बद्धतया साङ्गं स-हेतुकं च काल-निर्देश-पूर्वं वर्ण्यन्ते। आदिममितिवृत्तं तु कथा-मिश्रम्, आदिमा कथा च इतिवृत्त-मिश्रा भवति। यथा हि व्यक्तेस्तथा जातेरपि शैशवे प्रत्यक्षस्य स्वल्पत्वात्, विचार-बुद्धेः क्षीणत्वात्, कौतू-हलस्य चानिवार्यत्वात् प्रत्यक्षानुमितयोः, सम्भूत-सम्भाव्ययोः, भूताभीप्सितयोः, सु-परिज्ञात-कल्पितयोश्च विवेकः प्रायेण न

(४८) सिर्स स राम एण्ड होमार पृ. ११३, पाद-टीका। (४९) तदेव, पृ. ९१।

घटते। दुरत्याज्याश्च संस्काराः पुरुष-परम्परया प्राप्ताः। तन्नैतच्चित्रं यद् रामायणमितिवृत्तमपि काव्यं, काव्यमपीतिवृत्तमिति।

इदमेवेतिवृत्तं रामायणादुपलभ्यते। आसन्नार्यावर्ते कोशल-केकय-विदेहादयो जनपदाः। अयोध्या-राजगृह-मिथिलादयस्तेषां राजधान्यो बभूवुः। राजसु तेषामार्येषु कोशलाधिपः श्रेष्ठ आसीत्। राज्यं चासीत् तस्य पितृ-तन्त्रम् अमात्य-चक्र-नियमितं प्रजाभिमत-निर्दिष्ट-गति। स भवन्तं सूर्यं विष्णुं चोपासाञ्चक्रे, देवेभ्यो हविर्जुहाव, पितॄन् देवांश्च तर्पयामास (५०)। क्षत्रियो विना पुरोहितं—विनैव ब्राह्मणमपि—देवेभ्यः पितृभ्यश्च सामिषं भोज्यं निवेदयामास (५१), विना च पुरोहितं क्षत्रियाण्यपि विष्णु-प्रभृतीन् देवानर्चयाञ्चक्रे (५२)। राजा महर्षीणां पादाभिवन्दनं चकार (५३)। ऋषयो ब्राह्मणा अपि क्षत्रिय-जातीयान् नृपान् पूजयाञ्चक्रिरे (५४)। नार्यो ऽनार्यं सामाजिकं धर्मं सम्यगाचरति स्म (५५)। क्वचिद् राज्ञो बहु-पत्नीकत्वाद् युव-राजस्याभिषेके उपप्लवः समजनि। धनुर्बाण-खड्ग-चर्माणि चासन्नार्याणामायुधानि। बाणस्तु विस्फोटो ब्राह्मास्त्रमूचे। अङ्गुलि-त्रं तनु-त्राणं चास्ताम्। 'दुर्गा', 'महा-शाला-वृता' 'दुर्गं-गम्भीर-परिखाम्' (५६) 'चयाट्टालक-पर्यन्ताम्' (५७) च राजधान्यो बभूवुः। दुर्ग-प्राकारे शतघ्नी नाम

(५०) लघु रामायणम्, २।३।१ ; २।१९।३७ ; ३।६।३७। (५१) तदेव, २।१९।३३-३८। (५२) तदेव, २।३।३३ ; २।९।१-२ ; २।१९।५-७। (५३) तदेव, २।१८।१८, ३।३।२९, ३।४।१४। (५४) तदेव, २।१८।१९, ३।१।४, ३।४।१६। (५५) तदेव, ४।४।२९—३२। (५६) तदेव, १।१।५,६। (५७) तदेव, १।८।३।

अयः-कण्टक-संछन्ना, चतुस्ताला यष्टिः महती शिला वा न्यवेश्यत (५८)।

आसीच्च दक्षिणापथे वानर-राज्यम्। वानराः खलु ते मानवा विभिन्न-जातयो वर्षस्यादिमाधिवासिनो ऽनार्या बहु-वर्णाश्च ये महा-वनानां वृक्षेषु गिरि-गुहासु च न्यवसन्। प्रभूतं शारीर-बलं सारल्यम् आर्याणामानुगत्यं राक्षस-द्वेषः प्रभु-भक्तिश्चासन् तेषां लक्षणानि। प्रस्तर-खण्डानि वृक्षाश्च बभूवुस्तेषामायुधानि।

आसंश्चार्यावर्तस्य महा-वनेषु दण्डकायां च नर-भक्षका लिङ्गोपासकाश्च (५९) नरा राक्षसा नाम। न परिजगृहुस्ते आर्याणामेकमपि देवम्। न केवलं ते ऽ-कर्माणो ऽ-देवयवो ऽ-वृचो ऽ-व्रता अ-ब्रह्माणो ऽ-यज्वानश्चासन् (६०), प्रत्युत यज्ञ-वेदीस्तरसाभ्युपेत्य रुधिरेणाभिववृषुः(६१), महर्षीन् भक्षयामासुः (६२), रूपवतीश्च रमणीः बलात्-कारेण गृहीत्वोपयेमिरे। गदा शूलः शक्तिः परश्वधः परिघः पट्टिशः प्रासो ऽसिर्मुद्गरो धनुर्बाणो मुषलः कूट-मुद्गरो भिन्दिपालः शतघ्नी चासन् तेषामायुधानि। राक्षस-नेतार आर्यैर्विजिता: सानुचरा भारत-वर्षान्निर्गत्य द्वीपान्यध्यूषुः (६३)। ये तु राक्षसा भारतवर्षे न्यवसन्, ते ऽपि, स-जातित्वात्, लङ्काधिपं राक्षस-राजं शरण्यं मेनिरे। बलवन्तो

(५८) वङ्गीय-रामायणम्, १।५।१२। (५९) ऋग्-वेद-संहिता, ७।२१।५, १०।९९।३ ; रामायणम् (वङ्गीयम्), ७।२०।४२—४४। (६०) ऋग्-वेद-संहिता। अ-कर्माणः—अननुष्ठानाः। अ-देवयवः—अ-देव-पूजकाः। अवृचः—स्तोत्र-रहिताः। अ-ब्रह्माणः—पुरोहित-हीनाः। अ-यज्वानः—यज्ञ-रहिताः। मुम्बयी-रामायणम्, ७।१६।२२—२५, ७।२७, ७।२०।१४। (६१) लघु-रामायणम्, १।३।६। (६२) तदेव, ३।३।१८, ३।३।२४। (६३) रामायणम्, ७।६।८।

राक्षसा नाम आर्यावर्तं तदुत्तर-प्रदेशं चाभ्युपगम्य क्वचित् प्रणयेन क्वचिद् युद्धेन क्वचिच्चौर्येण रूपवतीर्नारीर्भार्यात्वेन परिजगृहुः (६४)। द्वीप-वासिना क्वचिना शठेन रूप-मुग्धेन आर्यावर्ताद् राज-भार्या-हरणं जातक-कथायामपि स्मर्यते (६५)। राक्षसाद्यपहरण-कलङ्क-भयेनार्येषु कन्या-हत्या प्रचचार।

तस्मात् स्त्रियं जातां परास्यन्ति, न पुमांसम्' (६६) इति

अनुमोदनं चात्र श्रूयते। क्वचिदार्यो ऽपि प्रार्थना-परितुष्टो राक्षसीं भार्यात्वेन परिजग्राह (६७)। राक्षसादार्यायामार्याद् राक्षस्यां वा यो ऽजायत सो ऽपि राक्षसो ऽभवत्। एवमार्य-शोणित-संमिश्रणेन उपरितनो राक्षस-वंशः शोणितोन्नतिमापद्यत, उपरितनो राक्षस-समाजश्च शिष्टाचार-समुन्नतिम् (६८)। ततः केचिद् यागेनाग्नि-मूर्त्तिं लिङ्गमुपासाञ्चक्रिरे, लिङ्ग-रुद्रयो रुद्राग्न्योश्चाभेदोपलम्भात् (६९)। एवमेव क्रमेण वैदिक-धर्मो ऽशत आर्य-राक्षसेनाभिशिश्रिये।

आर्य-प्रभाव-विस्तार एव दक्षिणापथ-लङ्कयोः रामायणेतिवृत्तमिति मन्वानो भट्ट-वेबरो (७०) भ्रान्त एव। न हि रामस्तत्र आर्य-राज्यं स्थापयाञ्चकार, न चार्यानुपनिवेशयामास, न च वानर-राक्षसानार्य-भावं ग्राहयितुं प्रयेते। केचिद् रामादि-नाम्नां याथार्थ्यं सन्दिहाना आकाश-

(६४) तदेव, ७।१—२२। (६५) सुस्सोन्दि-जातक। (६६) वेबर-धृतं काठक-वचनम् (२७।९)। (६७) रामायणम्, ७।९। (६८) लघु रामायणम्, ३।७।१७, ६।८।१३, ६।१०।२५-२६। (६९) 'अग्निर्वै रुद्रः'—शतपथ-ब्राह्मणम्, ६।१।३।१०। लिङ्ग-पुराणस्य १।१७५—५२ तथा १।१९।८-प्रभृतीनि वचनानि पठितव्यानि।

(७०) माकडनेलु'स हि, स, लि, पृ. ३११।

प्रसूतं मन्यन्ते रामायणम्। तन्न साधु। न हि नाम्नां क्लृप्तिमत्त्वेन लोक-वृत्तम् अ-यथार्थं भवति।

सीता-राम-लक्ष्मण-हनूमदादीनां देश-काल-निरपेक्षया आदर्श-चरिततया रामायणं काव्यमपि शास्त्रमभूत्। तस्य पाठे चित्त-शुद्धौ यत्न उत्पद्यते, गार्हस्थ्येषु, सामाजिकेषु, राष्ट्रीयेषु च कृत्येषु प्रवृत्तिर्जायते, स्वार्थ-परता-सम्भूतेभ्यो ऽपराधेभ्यो निवृत्तिश्च भवति। स्मर्यते च तस्य योजना वेद-भारत-पाञ्च-रात्रैः। तथा हि स्कान्दे,—

> 'ऋग्-यजुः-सामाथर्वा च भारतं पाञ्चरात्रकम्
>
> मूल-रामायणं चैव शास्त्रमित्यभिधीयते ;
>
> यच्चानुकूलमेतस्य तच्च शास्त्रं प्रकीर्तितम्' (७१) इति।

यच्चानुकूलमेतस्येत्यादिना प्राकृत-रामायणानामपि शास्त्रत्वम्। ब्रह्मवैवर्त-पुराणं पुराणानां नामान्युक्त्वा

> 'इतिहासो भारतं च वाल्मीकि-काव्यमेव च' (७२) इति

रामायणं पुराणैर्भारतेन च योजयति। शास्त्रत्वादेव पुराणेषु संक्षेपेण रामायणं प्रोच्यते। तथा हि, स्कन्द-पुराणे निर्वाण-खण्डे ऽस्ति राम-गीता (७३)। अग्नि-पुराणे विष्णु-पुराणे च सप्त-काण्डात्मकस्यैव रामायणस्य संक्षेपो दृश्यते (७४)। पद्म-पुराणे ऽपि रामोपाख्यानमस्ति (७५)। ब्रह्माण्ड-पुराणे अध्यात्म-रामायणं वर्तते (७६), यत्रोक्तं रामायणं सर्व-

---

(७१) सर्व-दर्शन-संग्रह-धृतं स्कन्द-पुराण-वचनम्। सर्व-दर्शन-संग्रहः (जीवानन्द-संस्कृतः), पृ. ७१। (७२) ब्रह्मवैवर्त-पुराणम्, ४।१३३।२२। (७३) ए. एस्. बी. लिपिः। (७४) अग्नि-पुराणम्, ५-११। विष्णु-पुराणम्, ४।४।४०—४७। (७५) पद्म-पुराणम्, १।३५—३८, ५।१—६९। (७६) ए. एस्. बी. लिपिः।

पुराण-सम्मतमिति। पुराणोक्तं पद्यमयं रामोपाख्यानं गाथे-त्याख्यामलब्ध। तदुक्तं हरि-वंशे, राम-कथान्ते,—

'गाथा अप्यत्र गायन्ति ये पुराण-विदो जनाः
रामे निबद्ध-तत्त्वार्था—माहात्म्यं तस्य धीमतः' (७७) इति।

यथेशाह्वीषु नव-नियमस्य प्रभावस्तथैव वेद-वादिषु—उदीच्येषु ततोऽधिक एव (७८)—रामायणस्य। एतत् खल्वद्यापि भारत-वर्षे जागरूकं जन-कोटीनां चरितानि नियमयदास्ते। वर्षेतिवृत्तं लोक-प्रतीतिश्चोपकरणीकृत्य जन-हृदोऽपरिस्फुटम् अ-ज्ञातं दुर्बोधं चाकाङ्क्षितमादर्शीकृत्य च प्रावर्ततेति रामायणं जन्म-प्रभृत्येव सर्व-जन-समादृतमभूत्। प्राकृतानां जन्तूपासन-परत्वाद् अति-बला वानराख्या वन्या मानवा देवांशाः, बलवन्तो युद्ध-चौर्य-क्रौर्यादि-कुशला राक्षसाश्च देव-प्रभावास्, तथा प्रकृति-समीक्षणाभावात् यत्र कुत्रचित् स्थितानि शैल-खण्डानि, जन-सहस्रैरपि चालयितुमशक्यानि, देव-देवांश-मानव-निर्मितानि चेति लोक-प्रतीतिरासीत्। राज्ञां सत्य-प्रतिज्ञत्वं, दृष्टान्तेन दण्डेन च धर्म-रक्षणम्, आश्रित-जन-संरक्षणं च, पितुर्गृह-शासनम् अनुजस्याग्रजानुगत्यं, पत्न्याः सतीत्वं पातिव्रत्यं च, पत्युः प्रेमा रक्षण-सामर्थ्यं चेत्यादीन्याकाङ्क्षितान्यासन्।

स्व-प्रभावेणैव रामायणे शास्त्रत्वमापन्ने नायको रामोऽपि देवत्वमवाप। तत्रादाविन्द्र एव प्रधानो देव आसीत्, विष्णुर्द्वितीयः। विष्णोर् इन्द्रानुगत्ये

---

(७७) हरि-वंशः (मुम्बय्यां मुद्रितः, १८९५), १।४१।४९। (७८) विण्टरनिट्ज़्स् रामायण, इन्ट्रोडाक्शन्, पृ. २८।

'छत्र-चामर-पार्थिवं प्रवानं लक्ष्मणस्तदा
मन्वारुरोह देवेन्द्रमुपेन्द्र इव हर्षयन्' (७९) इत्यादि

प्रमाणम्। कालात्यये देव-राष्ट्र-विप्लवे सति पुरस्तात् ब्रह्मा पश्चाद् विष्णुः प्रधानो बभूव, रामस्य प्रथमं विष्णूपासक-स्ततो देवत्व-प्राप्तौ स्वयमेव विष्णुः। यदा नारदो वाल्मीकये रामोपाख्यानमवदत् तदा ब्रह्मा प्रधानो देव आसीत् (८०), रामस्य मानुषः। राममेव हि मनसि-कृत्य स प्रोवाच,

'न्यूयतां तु गुणैरेभिर्यो युक्तो नर-चन्द्रमाः' (८१) इति।
'कौशल्याजनयद् रामं विष्णु-तुल्य-पराक्रमम्' (८२) इति

जन्म-विवरणे,

'स-पत्नया सेव्यमानं श्रियेव मधु-सूदनम्......
ववन्दे राममभ्येत्य सुमन्त्रो, विनयान्वितः' (८३) इति

राम-सुमन्त्र-समागम-वर्णने,

'तस्थौ भर्तारमासाद्य श्रीर्विष्णुमिव कम्पिता' (८४) इति

रावण-वधोत्तर-सीता-राम-समागमाख्याने च रामो मानुष एव। न हि कश्चिदात्मनोपमीयते, उपमायाः सादृश्य-मूल-त्वाद्, अभिन्नत्वे सति सादृश्य-कल्पनाया अनौचित्याच्च।

'अपश्यदाश्रमे रामं स्वर्ग-च्युतमिवामरम्' (८५) इति

साधारण-देवेन,

'न्यवसत् सहितो वीरः सीतया लक्ष्मणेन च
कञ्चित् कालं स धर्मात्मा, स्वर्गे इन्द्र इवापरः, (८६) इति

---

(७९) लघु रामायणम्, २।७।२५।

(८०) तदेव, १।१।८, २।२१।२९—३१; अथवादनुक्रमणिका, ४८। (८१) तैव, १०। (८२) लघु रामायणम्, १।२।४। (८३) तदेव, २।७।२२-२१। (८४) तदेव, ६।१६।१८ (८५) तदेव, २।२२।४५। (८६) तदेव, ३।५।१८।

इन्द्रेण,

'स विलोक्य मुहूर्तं तु ददर्श भरतो गुहम्......

महात्मानं, महा-भागं, ब्रह्माणमिव शाश्वतम्' (८७) इति

ब्रह्मणा,

'प्रासाद-स्थो रथ-स्थं तं ददर्शायान्तमात्म-जम्,

गन्धर्व-राज-प्रतिमं, लोके विश्रुत-पौरुषम्' (८८) इति

चित्ररथेन चोपमापि अवतार-वादं बाधते, प्रधानस्येतरत्व-प्राप्ति-प्रसङ्गात्। न रामे विष्णुत्व-कल्पना कथमपि सम्भवति। स हि महा-भागो मानव-साधारणेनाभिसन्धिमुद्योगं चेष्टां चिन्तां भावं च साधारणी-चकार। यदि रामो याथार्थ्येन सर्वज्ञस्य विष्णोरवतारो ऽभविष्यत्, तर्हि स्वे दशरथे,

'क्व नु, तात, पिता ते ऽभूद् यदरण्यं त्वमागतः' (८९) इति

स भरतं नावदिष्यत्, अपहृतायां च वैदेह्यां

'पर्वतं बहु-कूटं च, नाना-धातु-समन्वितं,

स-कानन-वनं, रामो व्यचिनोत् सह-लक्ष्मणः' (९०) इति

वाल्मीकिर्नावक्ष्यत्, लक्ष्मणश्च

'तत् तु न ज्ञायते रक्षो येनासावपहृता प्रिया' (९१) इति

हनूमन्तं नाकथयिष्यत्।

नापचीयते राम-चरितम् अवतारत्व-प्रतिपादकानां श्लोकानां वर्जने ऽपि, न चाख्यान-वस्तु तथा-विधानां सर्गाणाम्।

(८७) तदेव, २।२१।२९—३१। (८८) तदेव, २।३।५-६। (८९) तदेव, २।२२।२। (९०) तदेव, ४।१।३। (९१) तदेव, ४।१।२०।

न हि ते श्लोकाः सर्गाश्च ग्रन्थस्याङ्गत्वमापद्यन्ते, समन्वया-भावात्।

'तौ तु प्रज्वलितैर्बाणैरर्दितौ मर्म-भेदिभिः
निपेततुर् महेष्वासौ जगत्यां जगती-पती' (९२) इति च

अवतार-वादेन विरुध्यते। न हि राक्षस-शर-घातेन सर्व-शक्तेर्विष्णोः प्राकृतस्येव समर-क्षेत्रे मृत-कल्पो भूत्वा शयनं कथमपि प्रत्ययमर्हति। ब्रह्मेन्द्र-सहाय एव रामो रावणं जघानेति (९३) च तस्य प्रधान-देवत्वं निरस्यति। सीता च शर-बन्धे विललाप, ब्रुवती भर्तुर् दुर्निवार-शस्त्र-सहायत्वम् अ-मोघ-शस्त्रत्वं च तस्य दृष्ट-शत्रु-जये, दुरतिक्रमत्वं कृतान्तस्य, सामर्थ्यं च कालस्य कर्म-फल-प्रदाने, न सकृदपि पत्युर्विष्णु-त्वम्। सीताऽपि रामं मानुष इति बुबुधे।

'श्रीमत्यायतने विष्णोः शिश्ये नर-वरात्मजः,......
तुष्टाव प्रणतश्चैव प्रणम्य मधु-सूदनम्' (९४) इति

विष्णुम्,

'उपास्य सानुजः सूर्यमुद्यन्तं सह सीतया' (९५) इति

सूर्यस्योपासीनो रामो मनुष्य एव। न हि विष्णुर्विष्णु-मुपास्ते सूर्यं वा।

'हविर्हुत्वा च देवेभ्यः पितृभ्यस्तदनन्तरम्' (९६) इत्यादि
'तर्पयित्वा तु विधिवत् पितॄन् देवांश्च राघवः' (९७) इत्यादि च

रामस्य जन-साधारणत्वं ख्यापयति, हवनस्य तर्पणस्य चामरे-ष्वनुपपत्तेः।

(९२) तदेव, ६।२।३०। (९३) तदेव, ६।१३४,२८। (९४) तदेव, २।३।१,४। (९५) तदेव, ३।६।३७। (९६) तदेव, २।१८।३७। (९७) तदेव, ३।६।३७।

स्तोकं जेष्णोः पूर्वं परं वा रामो ऽवतारो बभूव। यदुक्तं भासेन तदुत्तर-द्वितीय-शतके,

'शङ्ख-क्षीर-वपुः पुरा कृत-युगे नाम्ना तु नारायणस्,
त्रेतायां त्रि-पदार्पित-त्रि-भुवनो विष्णुः सुवर्ण-प्रभः,
दूर्वा-श्याम-निभः स रावण-वधे रामो युगे द्वापरे,
नित्यं यो ऽञ्जन-सन्निभः कलि-युगे, वः पातु दामोदरः' (९८) इति।

प्राकृत-वचनानि समालोक्य कवेरस्य कनिष्क-सम-कालीनाद् अश्वघोषात् स्तोकं कनीयस्त्वं वक्तुमर्हामः।

नन्वमरेण विष्णु-नामसु यथा कृष्णः, न तथा राम उल्लेखीति, उच्यते, नानुल्लेखो ऽन्नानस्तित्वे प्रमाणम्। सत्यपि ह्यवतारे उपासक-विरलत्वेन प्रसिद्ध-शब्दाभिधाने नाम्नो ऽनुल्लेखः सम्भवति।

चरितानि रामायणस्य भारतीयान्येव। इहैव तानि सम्भूय प्राववर्धिषत। तदिक्ष्वाकुमधिकृत्यैषाभ्युक्ता ऋक्,

'यस्येक्ष्वाकुरुप व्रते रेवान् मराय्येधते दिवीव पञ्च कृष्टयः' (९९) इति।

दशरथमधिकृत्य चाभ्युक्ता

'चत्वारिंशद् दशरथस्य शोणाः सहस्रस्याग्रे श्रेणिं नयन्ति' (१००) इत्यादिः।

---

(९८) बाल-चरितम् ( अनन्तशयन-संस्करणम् ), पृ. १। शङ्ख-क्षीर-वपुः—श्वेत-कायः। (९९) ऋग्-वेद-संहिता, १०।६०।४। यस्य [जनपदस्य] इक्ष्वाकुः [राजा] रेवान् ( रयिवान्, धनवान् ) मरायी ( मारकः ) [च सन्] व्रते ( रक्षण-व्रते ) उपैधते ( प्र-वर्धते ), [यस्य भूमौ] दिवि ( स्वर्ग-लोके ) इव पञ्च कृष्टयः (जनपदाः) [सन्ति]। (१००) सैव, १।१२६।४। दशरथस्य चत्वारिंशत् शोणाः ( रक्त-वर्णाः ) [अश्वाः] [गो-यूथ-] सहस्रस्य अग्रे [रथ-] श्रेणिं नयन्ति।

रामञ्चाधिकृत्य

'प्र तद् दुःशीमे पृथवाने वेने प्र रामे वोचमसुरे मघवत्सु' (१०१) इत्यादिः ।

न त्वेते त्रयो राजानः स-कुलाः श्रूयन्ते। वाल्मीकिरेव तानेक-वंश्यानकार्षीत्। सीता चादौ कृषेरधिदेवतासीत्। तदेते ऋचावभूताम्—

'अर्वाची सु-भगे, भव, सीते ; वन्दामहे त्वा,

यथा नः सुभगाससि, यथा नः सुफलाससि' इति,

इन्द्रः सीतां नि गृह्णातु, तां पूषानु यच्छतु ;

सा नः पयस्वती दुहामुत्तरामुत्तरां समाम्' इति च (१०२)।

सैव गच्छति काले प्रजापतेर् दुहिता भूत्वा सोमं पतित्वेन वव्रे। तथा हि,—

'अथ ह सीता सावित्री सोमं राजानं चकमे। श्रद्धामु स चकमे। सा ह पितरं प्रजापतिमुपससार। तं होवाच, "नमस्ते अस्तु, भगवः। उप त्वा यामि। प्र त्वा पद्ये। सोमं वै राजानं कामये। श्रद्धामु स कामयत" इति। तस्या उ ह स्थागरमलङ्कारं कल्पयित्वा, दश-होतारं पुरस्ताद् व्याख्याय, चतुर्होतारं दक्षिणतः,

(१०१) सैव, १०।९३।१४। दुःशीमे पृथवाने वेने असुरे (बलवति) रामे मघवत्सु (धनवत्सु) [च] तत् [स्तोत्रं] प्रवोचम् (प्र-ब्रवाणि)।

(१०२) सैव, ४।५७।६, ७। [हे] सु-भगे सीते, त्वम् अर्वाची (अभिमुखी) भव; यथा नः (अस्मभ्यम्) सुभगाससि (सु-भगा भवसि, सौभाग्य-दायिनी भवसि), यथा नः सुफलाससि (सु-फल-दायिनी भवसि), तथा त्वा वन्दामहे। इन्द्रः सीतां निगृह्णातु (गृह्णातु), पूषा तां अनुयच्छतु (नियमयतु, परिचालयतु); सा पयस्वती (उदकवती) [सती] उत्तरामुत्तरां समाम् (उत्तरमुत्तरं संवत्सरम्) नः (अस्मभ्यम्) [शस्यम्] दुहाम् (दुह्यात्, दीव्यु)।

पञ्च-होतारं पश्चात्, षड्ढोतारमुत्तरतः, सप्त-होतारमुपरिष्टात्, सम्भारैश्च पत्निभिश्च मुखे ऽलङ्कृत्य आस्तार्थं, वव्राज। तां होदीह्योवाच, उप मा वर्तस्वेति। तं होवाच भोगन्तु म आचक्ष्व। एतन्म आचक्ष्व यत्ते पाणाविति। तस्या उ ह त्रीन् वेदान् प्रददौ। तस्मादु ह स्त्रियो भोगमेव हारयन्ते। इति।' (१०३)

अत्र स्थागर-पिष्टेनालङ्करणं रामायणे ऽनसूया-दत्तेनाङ्ग-रागेण यत् भूषणं वर्ण्यते (१०४) तस्य पूर्वाभास एव। गृह्य-सूत्रेष्वियमेव सीता इन्द्र-पत्नी भूत्वा नारी-जनोचित-कल्याण-गुण-गणालङ्कृतेति पत्या सह पूज्यते ; तस्या गोसारस्य प्रधर्षण-सम्भावनया सर्वास्वेव दिक्षु समाह्वयन्ते। तथा हि,—

'पृथिवी द्यौः प्र-दिशो दिशो यस्मै द्युभिरावृताः,
तमिहेन्द्रमुपह्वये—शिवा नः सन्तु हेतयः—स्वाहा !
यन्मे किञ्चिदुपेप्सितमस्मिन् कर्मणि, वृत्र-हन्,
तन्मे सर्वं समृध्यतां जीवतः शरदः शतं—स्वाहा !
सम्पत्तिर्भूतिर्भूमिर्वृष्टिर्ज्यैष्ठ्यं श्रैष्ठ्यं श्रीः प्रजामिहावतु—स्वाहा !
यस्या भावे वैदिक-लौकिकानां भूतिर्भवति कर्मणाम्,
इन्द्र-पत्नीमुपह्वये सीतां—
सा मे त्वन-पायिनी भूयात् कर्मणि कर्मणि—स्वाहा !
अश्वावती गोमती सूनृतावती बिभर्ति या प्राण-भृतो अ-तन्द्रिता,
खलमालिनीमुर्वरामस्मिन् कर्मण्युपह्वये ध्रुवां—
सा मे त्वनपायिनी भूयात्—स्वाहा !' इति॥ ९॥

(१०३) तैत्तिरीय-ब्राह्मणम्, २।३।१०। हस्ते अकुरुत—स्व-मुष्टि-मध्ये गोपयामास। स्थागरः—कश्चित् सुगन्धि-द्रव्य-विशेषः। दश-होतारं पुरस्तात् व्याख्याय, &c.—पूर्वादि-दिक्षु दश-होत्रादि-मन्त्रान् पठित्वा, &c. सम्भारैश्च पत्निभिश्च—सम्भार-मन्त्रैः देव-पत्नी-मन्त्रैश्च अभिमन्त्रितेन स्थागर-पिष्टेन। भोगन्तु म आचक्ष्व—सर्वदा भोगं करिष्यामीति मे प्रतिजानीहि।

(१०४) लघु रामायणम्, २।१।२३—२५।

'पुरस्ताद् ये त आसते सु-धन्वानो निषङ्गिणः,
ते त्वा पुरस्ताद् गोपायन्त्व-प्रमत्ता अनपायिनो !—
नम एषां करोम्यहं, बलिमेभ्यो हरामीमम्' इति ॥ १३ ॥
'अथ दक्षिणतो ऽ-निमिषा वर्मिण आसते,
ते त्वा दक्षिणतो गोपायन्त्व-प्रमत्ता अनपायिनो !—
नम एषां करोम्यहं, बलिमेभ्यो हरामीमम्' इति । १४ ॥
'अथ पश्चाद् आभुवः प्रभुवो भूतिर्भूमिः पार्ष्णिः शुनङ्कुरिः,
ते त्वा पश्चाद् गोपायन्त्व-प्रमत्ता अनपायिनो !—
नम एषां करोम्यहं, बलिमेभ्यो हरामीमम्' इति ॥ १५ ॥
'अथोत्तरतो भीमा वायु-समा जवे,
ते त्वोत्तरतः क्षेत्रे खले गृहे ऽध्वनि गोपायन्त्व-प्रमत्ता अनपायिनो !—
नम एषां करोम्यहं, बलिमेभ्यो हरामीमम्' इति ॥ १६ ॥ (१०५)

इह खल्विन्द्रो रामस्य, इन्द्र-पत्नी च राम-पत्न्याः प्रथम-रूपमेव भाति, सीता-प्रत्नवो राक्षसानां च । इन्द्र-प्रसङ्गेनात्र इन्द्र-

(१०५) पारस्कर-गृह्य-सूत्रम्, २।१७।९, १३—१६ । ९ । द्युभिः—कान्तिभिः । हेतयः—वज्रादीनि आयुधानि । उपेप्सितम्—प्राप्तुमिष्टम् । समृध्यताम्—समृद्धिं प्राप्नोतु । सम्पत्तिः—धनाद्युपचयः । भूतिः—ऐश्वर्यम् । भूमिः—आश्रयः । वृष्टिः—[अभीष्ट-]वर्षणम् । ज्यैष्ठम्—ज्येष्ठत्वम् । श्रैष्ठम्—श्रेष्ठत्वम्, सर्वोपकारित्वम् । श्रीः—प्रतिष्ठा-सम्पच्यादिः । प्रजाम्—सन्ततिम्, पुत्रादिकम् । भावे—सद्-भावे । अन्न-पायिनी—खाद्यादि-वृद्धि-कारिणी । अश्वावती—अश्वा विद्यन्ते अस्याम् इति (दीर्घश्छान्दसः) । सूनृतम्—मधुर-वाक्यम् । खल-मालिनी—खले (धान्य-राशि-स्थाने) मालते (शोभते) इति । ध्रुवा—स्थिरा । अनपायिनी—दुःख-ध्वंसिनी । १३ । [हे सीते], सु-धन्वानः—शोभन-धनुष्मन्तः । निषङ्गिणः—स-तूणीराः । पुरस्तात्—पूर्व-भागे । आसते—तिष्ठन्ति । पुरस्तात्—प्राच्यां दिशि । गोपायन्तु—रक्षन्तु । अ-प्रमत्ताः—सावधानाः । अनपायिनः—कष्ट-हराः । १४ । अ-निमिषाः—निमेषम-कुर्वाणाः । वर्मिणः—सन्नद्धाः । १५ । पश्चाद्—पश्चिमायां दिशि । आ-भुवः—समन्ताद् भवाः । प्र-भुवः—प्रकर्षेण भवाः । भूतिः &c.—भूत्यादि-नामानः ।

शम्बुरिति नाम्ना प्रसिद्धो वृत्रः स्मृतिमायाति (१०६), रामायण-बीजमिव सरमोपाख्यानं च (१०७), पणय इन्द्रस्य गा अपहृत्याति-दूरे गिरि-दुर्गे बध्नन्ति, सरमा नाम शुनी चेन्द्राज्ञया रसामुत्तीर्य दुर्गमधिगम्य पणीन् गाः प्रार्थयते, विफल-मनो-रथा सती प्रतिनिवर्तते च ; तत इन्द्रः स-बलो ऽभिनिर्याय पणि-दुर्गं दारयित्वा गा उद्धरतीति। किञ्च, इन्द्र-पत्नी भू-तल-स्था भवति, राम-पत्न्यपि भू-तलादुत्थिता (१०८) भू-तलमेव प्रविशति (१०९)। अपरञ्च, सन्ति मरुत इन्द्रस्य सहायाः, मारुतिरपि भवति सहायो रामस्य।

अथ कदा नाम रामायणं व्यरचि? आलोच्यते। आर्याः खलु रामायण-काले वैदिक-देव-प्रधान-बहु-देव-वादिन आसन् (११०), न, यथा वैष्णव-युगे शैव-युगे वा, एकेश्वर-वादिनः। इदं खलु रामायणस्य अति-प्राचीनत्वे प्रमाणम्। शाखा-बाहुल्यादपि रामायणस्यातिप्राचीनत्वमनुमीयते। गच्छति हि महत्येव काले देशे देशे प्रचरतो ग्रन्थस्य पाठ-भेद-बाहुल्येन शाखासु विभागः सम्पद्यते। रामो वै अयोध्यातो लङ्कां गच्छन् न क्वचिज्जनपदं गृहं वापश्यत्। तदायोध्यां लङ्कां चान्तरा सु-विस्तृतो देशो ऽ-प्रहत एव आसीत्। अतो ऽप्यव-गम्यते रामायणमति-प्राचीनमिति। रामायणे खलु जल-सलिलयोः, वनारण्य-काननानां, क्वचित् महोदधि-

---

(१०६) ऋग्-वेद-संहिता, १।३२।६, लघु-रामायणम्, ६।५।४६, ६।७।५। (१०७) ऋग्-वेद-संहिता, १०।१०८। (१०८) लघु रामायणम्, १।४।१३। (१०९) तदेव, ७।११।२१। (११०) तदेव, ६।७।६, २।२१।२९—३१, २।१९।३७ ; ३।४।१, ४ ; ३।६।३७।

सागरयोश्च भिन्नार्थत्वमुपलभ्यते। अमरस्तु समर्थत्वं वाचयति। अतो ऽपि आदि-काव्यस्य अति-प्राचीनत्वम् अनुमातव्यम्।

कात्यायनी-पुत्रः खलु ज्ञान-प्रस्थानं विरचयामास। तस्य हि महा-विभाषा नाम टीका जेशूत्तर-द्वितीय-शतकात् प्रागेव प्रथिन्थे इति पुरा-विदो मन्यन्ते (१११)। तत्र वै रामायणं द्वादश-सहस्र-श्लोकमयं सीता-हरण-तदुद्धरण-राम-प्रत्यागमनात्मकं चोच्यते। तस्मात् जेशूत्तर-प्रथम-शतके तदासीदिति गम्यते। तस्मिन्नेव शतके अश्वघोषः

'वाल्मीकि-रादस्य ससर्ज पद्यं जग्रन्थ यन्न च्यवनो महर्षिः' (११२) इति,

'लामरस्थे परित्यज्य सुमित्र इव राघवम्' (११३) इति,

'सुमीच बाष्पं पथि नागरो जनः पुरा रथे दाशरथेरिवागते' (११४) इति,

'यथा वन-स्थः सह-वामदेवो राम' दिदृक्षुर्मुनिरौर्वशेयः' (११५) इति,

'तथा महीं विप्रकृतामनार्यैस्तपो-वनादेत्य ररक्ष रामः' (११६) इति च

वदन् वाल्मीकेरादि-कवित्वं रामायण-तदितर-रामोपाख्यानयोरस्तित्वं च कीर्तयति। जेशूत्तर-द्वितीय-शतके भासो नाम कविः अवतार इति रामं (११७) 'आह सत्यम्' इति च रामायणमभिधत्ते (११८)। प्राचीनत्वं गत एव रामायणे रामस्यावतारत्व-प्राप्तेः जेशूत्तर-द्वितीय-शतके ऽपि रामायणं प्राचीनमवर्ततेति मन्तव्यम्। रामायणस्य नाटकी-

---

(१११) जा. र. ए. सो., १९०७, पृ. ९९। (११२) बुद्ध-चरितम्, १।४८। (११३) तदेव, ८।२६। सु-मित्रः—[ रामायणे ] सु-मन्त्रः। (११४) तदेव, ८।८। (११५) तदेव, ९।९। और्वशेयः—अगस्त्यः। (११६) तदेव, ९।५९। (११७) उपरिष्टात् १।।७० पृष्ठं द्रष्टव्यम्। (११८) अभिषेकनाटकम् (अनन्तशयन-संस्करणम्), पृ. १६-१७।

करणं सु-प्राचीने महा-भारत-परिशिष्टे ऽपि स्मर्यते। तदुक्तम्,

'रामायणं महा-काव्यमुद्दिश्य नाटकी-कृतम्—
जन्म विष्णोर-मेयस्य राक्षसेन्द्र-वधेप्सया' (११९) इति।

बौद्ध-जैन-यवन-साहित्येषु तथा पातञ्जले महा-भाष्ये अयोध्या साकेतमुच्यते (१२०)। रामायणे तु अयोध्येति प्राचीनतरं नामैव दृश्यते (१२१)। महा-भाष्यं जेशु-पूर्व-द्वितीय-शतके व्यलेखीति पुरा-विदो वदन्ति (१२२)। तस्मात् ततः पूर्वं रामायणमासीदिति निश्चयः सङ्गच्छते। जेशु-पूर्व-चतुर्थ-शतके सेकेन्दर-साहस्य सिन्धु-सन्तरण-काले भारतवर्षे नार्या मृत-भर्तुरनुगमनं प्राचीनाचार एवासीदिति यवन-लिपिभ्यो ऽवगम्यते (१२३)। रामायणे तु मृतेष्वपि बहुषु आर्य-वानर-राक्षसेषु नैकापि भार्या पतिमनुगच्छतीति सेकेन्दर-काले रामायणं प्राचीनमेवासीदिति गम्यते। रामायण-काले आर्यावर्तमपि कोशल-केकय-वैशाल-विदेहादिषु बहुषु खल्पायतन-राज्येषु विभक्तमासीत्, का कथा दक्षिणापथस्य? जेशु-पूर्व-चतुर्थ-शतके यन् महा-साम्राज्यं पाटली-पुत्रमाश्रित्यो-द्बभूव, रामायणे तस्याभासोऽपि नास्ति। अतो ऽपि निश्चीयते, रामायणं जेशु-पूर्व-चतुर्थ-शतकात् प्रागेवोदपद्यतेति। यदा सुगतः परिनिर्वाणं प्र-विवेश, तदेव विजयो नाम राढ़-राज-

(११९) हरि-वंशः (मुम्बय्यां मुद्रितः, १८९५), २८९३।६। (१२०) माक्डोनेल्'स् हिष्टरि अव् सानस्क्रिट् लिटारेचार् पृ. ३०८। (१२१) 'रामे राजीव-ताम्राक्षे साकेतं पुनरागते' (लघु रामायणम्, २।१४।२४) इति श्लोकार्धः प्रक्षिप्त एवेति बोध्यः, साकेत-शब्दस्य रामायणे ऽन्यत्रादर्शनात्। (१२२) माक्डोनेल्'स् हि. सा. लि. पृ. ४३१। (१२३) त्रिफिथ् स् रामायण, १, इन्ट्रोडाक्शन्, पृ. २३।

कुमारो लङ्कां विजिग्ये। ततः प्रभृत्येव च सा विजेतुः कुल-नाम्ना 'सिंहला' इति, भूमि-स्पर्शेनागन्तुक-पाणेस्ताम्र-वर्णत्व-प्राप्तेः 'तम्बपण्णि' इति चाख्यया भुवि पप्रथे (१२४)। रामायणे तु सा सर्वत्र लङ्केव कथ्यते, न कुत्रचित् 'सिंहलं' 'ताम्रपर्णी' वा। अतो ऽनुमीयते जेशु-पूर्व-पञ्चम-शतकात् प्रागेव तन्-महा-काव्यं व्यरचीति। जेशु-पूर्व-तृतीय-शतके पाटलिपुत्रं भारत-वर्षस्य राजधानी बभूव, चतुर्थे च आर्यावर्तस्य। पञ्चमे उदयाख्यो नाम भू-पतिस्तन्निर्ममे। ततः प्रागेव सौगत-काले अजात-शत्रुर् वृजीनाम् अभिनिर्याण-प्रतिरोधाय सुनीध-वर्ष-काराभ्यां तत्र दुर्गं कारयामास (१२५)। यदा रामः स-लक्ष्मणो विश्वामित्रं पुरस्कृत्य शोण-नदं पद्भ्यामेवोत्तीर्य दिनेनैकेन गङ्गां प्राप्य, नौकया तामुत्तीर्य वैशालीमगच्छत्, तदा न केवलं पाटलिपुत्र-भूमिः, प्रत्युत शोणं च गङ्गां चान्तरा कृत्स्न एव देशो ऽप्रहत आसीत्। पाटलिपुत्र-नगरं पाटलि-ग्राम-दुर्गं वा दूरे आस्ताम्, तथा-गत-चरण-स्पृष्टः पाटलि-ग्रामो ऽपि तदा नासीदेव। यः खलु कविः कथा-प्रसङ्गेन कौशाम्बी-काम्पिल्य-प्राग्ज्योतिषपुरादीनि दूर-वर्तीनि नगराण्यपि वर्णयति (१२६), स एव कथं नाम राम-चरण-रेणु-पूतं (१२७) विश्व-विश्रुतं नगरं ग्रामं वोपेक्षेत? अतो जेशु-पूर्व-पञ्चम-शतकात् प्रागेव रामायणस्य नवतमो ऽंश आदि-काण्डमभ्युदपद्यतेति स्थितम्।

---

(१२४) दीप-वंस, ९ ; ३।२९, ४।२७, ५।७७, ११।८-९। महा-वंस, ६-७।
(१२५) महापरिनिब्बाण-सुत्तं, १।२६। (१२६) रामायणं (वङ्गीया शाखा), ३।३५। (१२७) तदेव, १।३७, ४६।

वैशालीतः कतिचित् पदान्येव गत्वा रामो मिथिलां ददर्श। आदि-काण्ड-काले इदानीन्तने त्रिहुत-प्रदेशे प्रमति-राज्यं जनक-राज्यं चेति द्वे एव राज्ये आस्ताम्। वैशाली प्रमतेर् मिथिला च जनकस्य राजधानी बभूव। सौगत-काले तु कृत्स्न-मेव तं प्रदेशं व्याप्य एकमेव वृजि-राज्यं स्व-तन्त्रं रेजे। तदेव विजितमजात-शत्रुणा गच्छता कालेन वर्धमाने मगध-साम्राज्ये विलिल्ये। अतः सौगत-कालात् प्रागेव रामायणमजाय-तेति निश्चीयते। सौगत-काले प्रसेनजिन्नाम कोशल-राजः श्रावस्त्यां राज्यं चकार। रामायणे तु केवलमुत्तर-काण्ड एव श्रावस्त्या नामास्ति, तत्रापि च नव-नगर्या इव। राम-पुत्रो लव एव तां राजधानीं चक्रे। अतो ऽपि तथागतात् प्रागेव रामायणमजायतेति स्फुटम्। राम-परिदृष्टा आश्रमाः खलु सर्व एव वैदिका आसन्, नैको ऽपि बौद्धः, याग-स्वाध्यायादि-लक्षणत्वाद्। अतो ऽपि सौगत-कालात् पूर्वमेव रामायणं प्रादुरासीदिति प्रतिपद्यते। सर्व-जन-सम्मतं जन्मान्तर-वादमाश्रित्यैव तथागतो धर्म-चक्रं प्रवर्तयामास, स-फल-कामो बभूव च। रामायणे तु जन्मान्तर-वादस्याभासो ऽपि नानुभूयते (१२८)। तस्मात् सौगत-कालात् प्रागपि चिरमेव रामायणं प्रचरदासीदिति वक्तुमर्हामः। न हि स्वल्पेन कालेन आगतो वा समुद्भूतो वा संस्कारो जन-मनसि बद्ध-

(१२८) वेदवत्युपाख्याने युगपत् सह-मरणं पुनर्जन्म प्रेम-धर्मो ऽवतार-वादश्च उल्लिख्यन्ते। तत् तु मध्य-युगे केनचिद् राम-भक्तेनोत्तरकाण्डे प्राक्षिप्यतेति वक्तुमर्हामः, अन्यत्र सहमरण-प्रेमधर्म-पुनर्जन्मनामनुल्लेखात्। 'तमेवाहं हृदयेन समुद्वहे' इति मुम्बयी-माद्रास-शाखा-दृष्टो वैयाती-ऽनौचित-सङ्कल्पो गौडीय-शाखायां न दृश्यते।

मूलो भवति। ननु यवन-ग्रन्थेषु, प्राचीन-बौद्ध-शास्त्रेषु, परिव्राजः फाहियानः प्रबन्धे च रामायणं नोदलेखीति, अत्रोच्यते, नानुल्लेखो ऽत्रानस्तित्वे प्रमाणम्। न यवना भारतीय-साहित्यानि व्यवारिषुः ज्ञानाभावात्। तथा चादौ शास्त्रत्वाभावात् रामायणं नामंसत बौद्धाः। फाहियानं स्व बौद्धानि विहार-चैत्य-पुरोहित-स्मृति-मत-नास्तिक्यानि वर्णयन् रामायणं नोदलेखीत्, सम्बन्धाभावात्। प्रथमे युगे गायनस्य परे च लिपि-करस्येच्छया काले काले विषया अभिनवा रामायणं विविशुः। ग्रन्थे प्रक्षेप-बहुले पर-युग-सम्भव-विषयोल्लेख एव न तस्य पर-युग-सम्भूतत्वे प्रमाणम्। उक्तेनैव बौद्ध-विद्वेष एव रामायणस्य प्रयोजनमित्युक्तिः प्रत्युक्ता, बौद्ध-धर्म-तत्त्वमेव रामायणस्य सार इति यदुच्यते तदपि निरस्तम्।

'राक्षसानां विना वैरं वधो, वीर, न युज्यते ;
अपराधादृते नापि हन्तव्या राक्षसास्त्वया' (१२८) इति

सीता-वाक्यं प्रतिपद्यावलम्बनं वैदिक-धर्मं विवृणोति, न तथा-गतस्योपदेशं, सुगत-मते अ-हिंसायाः सार्वभौम-महा-व्रतत्वात्।

केचिदाहुः, दशरथ-जातकं नाम सरलं स्वल्पायतनं च बौद्धम् आख्यानमाद्ययोध्या-काण्डयोर्मूलं, होमीरस इलियाद् च शेषस्येति। प्रथमं तावद् दशरथ-जातकमधिकृत्य पृच्छामः, कथं नाम प्राचीनम् अर्वाचीनादुत्पद्येत ? रामायणस्य सौगत-कालात् प्राग्-भवत्वं पूर्वमेव प्रादर्शि ; उत्तर-काल-भवत्वं च जातकानां शाक्य-सिंहस्य बुद्धत्व-प्राप्तेस्, तैरेव वर्ण्यते।

(१२८) लघु-रामायणम्, ३।३।१५।

रामायणादर्वाचीनत्वे दशरथ-जातकस्य, अपराण्यपि प्रमाणानि सन्ति। तथा हि, रामायणस्य रामो लक्ष्मणः सीता भरतश्च जातके राम-पण्डितो लक्ष्मण-कुमारः सीता-देवी भरत-कुमारश्च बभूवुः। एक-शब्दात्मकात् नाम्नो द्वि-शब्दात्मकस्य पराचीनत्वं साहित्ये वंशानुक्रमे च दृश्यते। एवमेव रामः पुराणादिषु (१२०) रघु-पतिः राम-भद्रो राम-चन्द्रः श्रीरामः श्री-राम-चन्द्रः रघु-नाथः रघु-वीरश्च सञ्जातः, सीता च नाटके (१२१) सीता-देवी। अपरं च, रामायणे रामो 'ददर्शोत्यत्थ मातॄणां सार्धं-सप्त-शतानि' (१२२), दशरथ-जातके तु राम-पण्डितस्य माता 'सोलसन्नम् इत्थि-सहस्सनाम् जेट्ठिका अग्ग-महेसि' आसीत्। अतीत-युग-भारत-साहित्येषु अति-वृत्तिर् यथोत्तरं वर्धमाना दृश्यते। अन्यच्च, रामायणस्य वङ्गीया शाखा राम-राज्य-काल-परिमाणं न निर्दिशति। प्रतीची उदीची च तं दश वर्ष-सहस्राणि (१२३), अवाची च दश वर्ष-सहस्राणि (१२४) एकादश वर्ष-सहस्राणि च (१२५) राज्यं कारयति। जातक-मते तु राम-पण्डितः 'सोलस वस्स-सहस्सानि धम्मेन रज्जं कारेत्वा सग्ग-पदं पूरेसि'। अनयाति-वृत्त्यातिशेते दशरथ-जातकं रामायणस्य सर्वा अपि शाखाः। अन्यच्च, रामायणे चत्र-राज-कुमारः पितुरङ्गीकारम-वितथं कर्तुम् अविकृत-मना एव वनं

---

(१२०) पद्म-पुराणम्, ५।१।२, ९, १०, ११ ; अध्यात्म-रामायणम् ; महा-वीर-चरितम्, १ ; उत्तर-चरितम्, १ ; हेम-चन्द्र-कृतं योग-शास्त्रम्, &c. (१२१) उत्तर-चरितम्, २। (१२२) लघु-रामायणम्, २।१४।४१। (१२३) मुम्बयी-रामायणम्, ६।१२८।९५, १०४। काश्मी-रामायणम्, १।१२०। (१२४) माद्रास-रामायणम्, ६।१३१।१९१। (१२५) तदेव, ६।१२१।१०२।

जगाम; जातके तु स एव अग्नि-खण्डमिव ज्वलन्नपि जीवत्यपि सतां रक्षितरि महा-राजे पितरि विमातुरात्मनो जीवित-हानिमाशङ्क्य वनं प्रस्थास्यमानो भ्रात्रा भगिन्या च रुदन्नेव प्रासादान्निश्चक्राम। दिग्विजयिनः चत्र-राज-कुमारस्य क्रमेण नारी-भावापत्तिरुत्तर-चरितादिभ्यो ऽप्युपलभ्यते। अन्यच्च, जातके कूट-पत्रेण अग्र-महिष्याः स्वार्थ-सिद्धिराशङ्क्यते, रामायणे तु सत्यपि प्रयोजने पत्र-व्यवहारो न दृश्यते। वस्तुतस्तु केचिदा-चार्या बौद्ध-धर्म-तत्त्वानि व्याख्यातु-कामा यथान्यतो ऽन्याः कथास्तथा रामायणादपि व्यास-हेमचन्द्रादिवत् राम-कथाम् अग्रहीषुः। भिक्षु-धर्म-प्रभावेणैव स्वभाव-चञ्चलस्यापि जनस्य स्थित-प्रज्ञत्वमुत्पद्यते इति अनेन जातकेनोपदिश्यते। रामायण-वर्णितानामवाचामाश्रमाणामार्षत्वाद् राम-पण्डितो हिमवन्तं प्रास्थाप्यत। स-श्लोकस्य भिक्षु-धर्मे ऽधिकाराभावाच्च सीता-देवी प्रथमं भगिन्यङ्गियत, पश्चाद्, असम्याय्यैव विवाहमन्तरा, अभिषेक-काले, आदित एव पत्नीति, अग्र-महिषी। श्लोको ऽपि रामायणादत्रोद्धृतः। रामायणाज्जातके जातकाद् रामा-यणे वेति संशये ब्रूमः,—आर्या-वृत्तमादिमे बौद्ध-साहित्ये दृश्यते, न रामायण-भारतयोः। अनुष्टुप् तु रामायण-भारतयोर् वृत्तमस्ति, न पालि-साहित्यस्य। श्लोक-साम्ये रामायणादेव जातकस्य ग्रहणमनुमातव्यम्, न विपर्ययः, जातकस्याप्यनुष्टुभः संस्कृत-वृत्त-नियमानुवर्तनात्, व्यत्ययानां भाषान्तर-प्राप्ति-पाठ-विकृति-कारणत्वाच्च (१२६)।

---

(१२६) माक्डोनेल्'स् हि. स. लि., पृ. ३०७।

दार-हरणं तदुद्धरणं च अरण्य-काण्डादौ युद्ध-काण्डान्ते रामायणे प्राधान्येन वर्ण्यते। हृत-दारोद्धरणार्थं युद्धमेवेलिआडो विषयः। अयोध्या-स्पार्टयोर्, लङ्का-ट्रयोः, रावण-पारिसोः, राम-मेनेलाअसोः, सीता-हेलेन्योर्, एगामेम्नो-सुग्रीवयोर्, लक्ष्मण-पाट्रक्लसोर्, हेक्टोर्-इन्द्रजितोर्, हनूमद्-आइआसोर्, आण्टेनोर्-विभीषणयोर्, नेष्टोर्-जाम्बवतोश्च सारूप्यमस्ति। चय-स्थाय प्रिआमसे हेलेनो, शैलाग्र-गताय रामाय च विभीषणो विपक्ष-सेनापतीन् दर्शयति (१३७)। शत्रु-सेना-पर्यवेक्षणमुभयोरेव काव्ययोरेक-विधमेव (१३८)। उभयत्रैव मोहिनी तदर्थं-त्यक्त-जीवित-सेना-समक्षमाविर्भवति (१३९)। युयुत्सुना पत्या समागमो यथाण्ड्रमाख्यास्तथा मन्दोदर्या अपि दृश्यते (१४०)। वर्णन-रीतिरपि एक-विधैव। भगवदुदार-देव-दिवा-रात्रि-वन-पर्वत-नदी-वाचि-पदानाम् उभयत्र बाहुल्य-मस्ति। उभयत्रैव महत्युपमा विपुलं शब्द-चित्रं समुज्ज्वलयति। तस्मात् केचिद् (१४१) ब्रुवन्ति इलिआडो रामायणमुदपादीति, केचिच्च (१४२) रामायणादिलिआडिति।

अत्र ब्रूमः,—जेष्ठ-पूर्वाष्टम-शतके इलिआट् समप्रावर्ततेति पुरा-विदो वदन्ति (१४३)। रामायणमपि षष्ठ-शतकाद् अति-पूर्वमप्यासीदित्यवोचाम। अतो द्वयोरेतयोः कतरत् पूर्व-

---

(१३७) इलिआड् (डार्बेरंग्लानुवादः), ३।२१०—२७२ ; वङ्ग रामायणम्, ६।५।१—१७। (१३८) तदेव, ६।१।८—११ ; इलिआड् (डार्बेः), ३।१७५—१८५। (१३९) सैव, ३।१७५—२७२ ; वङ्ग रामायणम्, ६।१६।१—१७। (१४०) इलिआड् (डार्बेः), ६।४६०—५७१ ; वङ्ग रामायणम्, ६।३।१५—३१। (१४१) भट्ट-वेबरादयः। (१४२) डिमन् क्रिसष्टोमस्, फौशे, ब्लिरी च। (१४३) नेलुसन्'स्

तनमिति निश्चेतुं न शक्यते। पौर्वापर्य-निर्णयाभावे कार्य-कारण-सम्बन्धः कथं निर्णीयेत? स चात्र नाशङ्कनीयः, सारूप्यस्याकिञ्चित्-करत्वात्। दार-हरणं तदुद्धरणार्थं युद्धं चादिमे समाजे साधारणमेव। स्थान-साम्यं वा किम्? नायोध्या स्पार्टेव वर्ण्यते, न च लङ्का प्राचीर-वेष्टितापि ट्रयिव लक्ष्यते। चारित्र-साम्यं न गभीरम्। यदस्ति तत् मानव-चित्त-साम्यादेवोद्भवति। न रावणः पारिस इवाभियोक्तारं दृष्ट्वैव पलायाञ्चक्रे, न च प्रवृत्ते युद्धे ऽन्तः-पुरं प्रविश्य प्रियया रेमे। राज-सभामागतामपि समरात् निवृत्तये ऽनुनयन्तीं भार्यां प्रति तस्योक्तिर् लाक्षणिकैव,

'अहं यास्ये रणाजिरम्;
अन्तः-पुराय गच्छ त्वं—सुखिनी भव, स-स्नुषा' (१४४) इति।

न मेनेलाम्रा राम इव समरे ऽ-पराङ्मुखो ऽ-पराजेयो धर्म्य-युद्ध-परायणः सती-पत्नीको भ्रष्ट-पत्नी-विमुखश्च। सत्यपि समाने सीता-हेलेन्यो रूपे अस्ति तयोर् महदन्तरम्। हेलेनी रूप-मुग्धा स्वेच्छयेव पत्युरावासं हित्वा पर-पुरुषमनुजगाम, भार्येव च तेन उवास; भर्तुः स्मरणे ऽभिष्यन्दमानापि उपपति-सङ्ग-तायां ननन्द च (१४५)। सीता तु बलात्-कारेण हृता बलवतो हर्तुर् बीभत्समाना लङ्कायामपि पतिमेव हृदयेनावलम्ब्य तपसा कालं निनाय। सा सती, धुरि स्थिता च पति-देवता-नाम्। हेलेनी, चरित्र-बल-हीना, रूपेणैव—अहो प्रभावो

एन्साइक्लोपिडिया—होमार्। (१४४) लघु रामायणम्, ६।४।२१। (१४५) इलियाड् ( डार्बे: ), ३।४६४—५०७, ५१८—५२०।

मोहिन्याः!—चरित्र-दोषं द्विषतः प्रशान्त-मनसो ज्ञान-वयो-वृद्धान् नायकान् मन्त्रिणश्चापि मोहयामास चकर्ष च—निन्दितापि तैरनिच्छद्भिः प्राशस्यत (१४६)। आण्ड्रमाखी न हेलेनीव विजय-भागिनी। सा सीतेव निर्मला च निरवद्या च मधुर-प्रकृतिश्च कृत्य-परायणा च पत्नी। नारी-जनोचित-कल्याण-गुण-गण एव तस्या आकर्षणम्। एतादृश्येव गृहराज्ञीति पूज्यते। सापि सीता-समक्षं न प्रकाशते। अ-परिमेया खलु वैदेह्याः परार्थ-परता, अ-हेतुकः प्रणयो, विश्व-जन्या प्रीतिः, पवित्रो भावः, अपराजेयं निर्भीकत्वमविचलो विश्वासो, दुरतिक्रमा तेजस्विता च। एगामेम्नो समर-भूमौ सुग्रीव इव नाचचार। स हि मृत्यु-भय-सन्त्रस्तो वि-जिगीषुरप्यनेकशः समरात् पलायितुमियेष; लक्ष्मणो ऽयोध्यायां राममनुगतो वन-वासे तस्य परिचारको लङ्कायां च प्रधान एव सहायो बभूव। न तथा पाङ्गोक्त्रा मेनेलाश्चासः। हेक्टोर्-इन्द्रजितौ द्वावेव प्रधानौ प्रतिपक्ष-नायकौ। समाहृत एव हन्ता, अ-समाप्ते ऽपि यज्ञे विजय-हेतौ, यथोचितं युयुधे इन्द्र-जित्; हेक्टोरस्तु, दुर्बल-चेता विश्वस्त-भीतश्च, एकाक्येव योद्धुं नगराद् बहिः स्थितो ऽपि, प्रतिपक्षं दृष्ट्वैव, श्येनमालोक्य कपोत इव, भीत-भीतः प्रतिबद्धे ऽपि नगर-प्रवेशे, आखिलेभ्यः पलायमानस्, त्रिर् द्वाराय नगरं परितो वेगेन दधाव (१४७)। यवन-बल-भूत आइआ दुर्जय-बलेन दानवानामपि सेनानीत्वम् आनर्ह। हनूमांस्तु तं बुद्ध्याति-

(१४६) सैव, ३।१८३—१९१। (१४७) सैव, २२।१६२—२४७।

